णविशेषे नडादौ ॥ तृण्यते । तृणु अदने । घञ् । संज्ञापूर्वकत्वाद्गुणो न ॥ यद्वा । तृहति । तृहूहिंसायाम् । तृहेः क्नोहलोपश्च ॥ अग्निचौरभयं रोगो राजपीडा धनक्षतिः । सङ्ग्रहे तृणकाष्ठानां कृते । वस्त्रादिपञ्चके ॥

तृणकन्दः । पुं । कशेरुणि ॥

तृणकाण्डम् । न । तृणानां समूहे ॥ दूर्वादिभ्यःकाण्डः ॥

तृणकुङ्कुमम् । न । सुगन्धद्रव्यप्रभेदे । तृणपुष्पे । गन्धाधिके ॥ कटुत्वमुष्णत्वं कफमारुतशोफकण्डूतिपामाकुष्ठामदोषनाशित्वं परमभास्वरत्त्वञ्चास्यगुणाः ॥

तृणकुटी । स्त्री । कायमाने । तृणौकसि ॥

तृणकूर्म्मः । पुं । तुम्ब्याम् ॥

तृणकेतुः । पुं । } वंशे ॥
तृणकेतुकः । पुं । }

तृणगोधा । स्त्री । चित्रकोले ॥ कृकलासे ॥

तृणग्रन्थिः । स्त्री । स्वर्णजीवन्त्याम् ॥

तृणग्राही । पुं । नीलमणौ ॥ कपूर इति प्रसिद्धे मणिविशेषे । तृणमणौ ॥

तृणजातिः । स्त्री । उलपादौ ॥

तृणज्योतिः । न । रात्रौ प्रकाशशालिनि



लताविशेषे ॥

तृणता । स्त्री । कार्मुके । धनुषि ॥ तृणत्वे ॥ भावेतल् ॥

तृणद्रुमः । पुं । नारिकेलादिवृक्षेषु ॥ ताले ॥ गुवाके ॥ ताल्याम् ॥ केतक्याम् ॥ खर्जूरे ॥ खर्जूर्याम् ॥ हिन्ताले ॥

तृणधान्यम् । न । नीवारे । श्यामाकादौ । उडिधान इतिगौडभाषा ॥ तृणमिवधान्यम् अकृष्ट्योत्पन्नत्वात् ॥

तृणध्वजः । पुं । वंशे ॥

तृणनिम्बः । पुं । नेपालनिम्बे ॥

तृणपत्रिका । स्त्री । इक्षुदर्भायाम् ॥

तृणपत्री । स्त्री । गण्डाशिन्याम् ॥

तृणपुष्पम् । न । तृणकुङ्कुमे ॥

तृणपुष्पी । स्त्री । सिन्दूरपुष्पीवृक्षे ॥

तृणपूली । स्त्री । चाँच इतिगौडेषु प्रसिद्धे । चञ्चायाम् ॥

तृणमणिः । पुं । तृणग्राहिणि ॥

तृणमत्कुणः । त्रि । लग्नके । जामिन् इतिभाषा ॥ इतित्रिकाण्डशेषः ॥

तृणराजः । पुं । नारिकेले ॥ तालवृक्षे ॥ तृणानां राजा । टः ॥

तृणराजाह्वः । पुं । तालद्रुमे ॥ तृणराजइत्याह्वायस्य ॥

तृणराजाह्वयः । पुं । तालवृक्षे ॥ तृण

राजहस्त्याख्येयोयस्य ॥

तृणवल्वजा । स्त्री । वल्वजायाम् ॥

तृणबीजः । पुं । } श्यामाके ॥
तृणबीजोत्तमः । पुं । }

तृणशीतम् । न । गन्धतृणे । कत्तृणे ॥

तृणशीता । स्त्री । जलपिप्पल्याम् ॥

तृणशून्यम् । न । मल्लिकायाम् ॥ केतकीशाखिनः फले ॥ तृणशून्येत्यानेसाधु । तत्रसाधुरितियत् ॥ त्रि । तृणरहिते ॥

तृणषट्पदः । पुं । वरोले । वरटायाम् । वरडे इति ततैया इतिचभाषा ॥

तृणसारा । स्त्री । कदल्याम् ॥ तृणानिसारमस्याम् ॥

तृणसिंहः । पुं । कुठारे ॥

तृणहर्म्यः । पुं । मयटे । तृणनिर्म्मितकुटिकायाम् । मैडा इतिभाषा ॥

तृणाग्निः । पुं । वल्कले । तृणोत्थवह्नौ ॥

तृणाङ्घ्रिपः । पुं । मन्थानकतृणे ॥

तृणाञ्जनः । पुं । कृकलासे ॥

तृणाढ्यम् । न । पर्वततृणे । मृगप्रिये ॥

तृणाम्लम् । न । लवणतृणे । लूणियाघाक इतिभाषा ॥

तृणासृक् । पुं । तृणकुङ्कुमे ॥

तृणेक्षुः । पुं । वल्वजायाम् ॥

तृणोत्तमः । पुं । उलवैश्वतृणे ॥

तृणोद्भवः । पुं । नीवारे ॥



तृणौकः । न । कायमाने । तृणनिर्म्मितगृहे ॥

तृणौषधम् । न । एलवालुकाख्यगन्धद्रव्ये ॥

तृण्या । स्त्री । तृणसमूहे । तृणानां संहतौ ॥ तृणानांसमूहः । पाशादिभ्योयः ॥

तृतीयः । त्रि । त्रयाणां पूरणे । तीसरा इतिभाषा ॥ त्रेःसम्प्रसारणञ्चेतितीयप्रत्ययः सम्प्रसारणञ्च ॥

तृतीयकः । पुं । तृतीयकस्तृतीयेऽह्नीतिलक्षणलक्षितेज्वरविशेषे ॥ तृतीयेऽह्नीत्यागमदिनंगृहीत्वा । यदुक्तम् । दिनमेकमतिक्रम्य योभवेत् सतृतीयक इति ॥ तृतीयेऽह्निभवः । कालप्रयोजनाद्रोगइतिकन् ॥ त्रिके ॥ तृतीयेन रूपेण ग्रहणम् । तावतिथंग्रहणमितिलुग्वाइतिकन् ॥

तृतीयप्रकृतिः । स्त्री । क्लीबे ॥ स्त्रीपुंसावपेक्ष्य तृतीयाचासौप्रकृतिश्चेति विग्रहः ॥

तृतीया । स्त्री । तिथिविशेषे । चन्द्रमण्डलस्य तृतीयकलाक्रियारूपायाम् । तत्क्रियोपलक्षिते काले वा ॥ सकलगुणगभीरो भूमिपालानुरागी परनगरविगाही सर्वलोकोपकारी । परविषयनिवासी कौतुकी सत्य

वादी भवति निखिलविद्यो यस्तृतीयाप्रहृतः ॥ टा भ्याम् भिस् इति त्रिके ॥ टाप् ॥

तृतीयाकृतम् । त्रि । त्रिगुणाकृते । त्रिवारकृष्टक्षेत्रे ॥ तृतीयंकृतम् । कृञो द्वितीयतृतीयेति डाच् ॥

तृतीयाप्रकृतिः । स्त्री । नपुंसके ॥ स्त्रीपुंसावपेक्ष्य तृतीया प्रकृतिः तृतीयः प्रकारः । असमस्तमेतत् । समासे तु तृतीयप्रकृतिरेव ॥

तृपत् । पुं । चन्द्रे ॥ छत्रे ॥ तृप्यति तृप प्रीणने । संस्वत्तृपद्वहदिति अति प्रत्ययान्तो निपातितः ॥

तृपला । स्त्री । लतायाम् ॥ तृप्यति । तृप० । कलस्तृपश्चेति तृपतेः कल-प्रत्ययः ॥

तृप्तः । त्रि । हृष्टे । प्रमुदिते । प्रीते । तृप्तियुक्ते ॥ तृप्यति स्म । तृप० । क्तः ॥

तृप्तिः । स्त्री । तर्पणे । सौहित्ये । भक्षणादिनाकाङ्क्षानिवृत्तौ ॥ सर्व-कामावाप्तौ । अलम्प्रत्ययेनेच्छाविच्छित्तौ ॥ तर्पणम् । तृप० । स्त्रियां-क्तिन् ॥

तृप्रः । पुं । घृते ॥ पुरोडाशे ॥ तृप्यते-ऽनेन । तृप० । स्फायितञ्चीतिरक् ॥ न । काष्ठे ॥ दुःखे ॥

तृप्राशुः । त्रि । तृप्रं न सहते । आशुः ॥

तृफला । स्त्री । त्रिफलायाम् ॥ तृफति । तृफ तृप्तौ । कलस्तृपश्चेति चका-रात् तृफतेरपि कलः ॥

तृफुः । पुं । सर्पजातौ ॥

तृट् । स्त्री । लिप्सायाम् । वाञ्छायाम् ॥ उदन्यायाम् ॥ स्मरपुत्र्याम् । कामकन्यायाम् ॥ तर्षणम् । ञितृष पिपासायाम् । संपदादि क्विप् ॥

तृषा । स्त्री । तृषि ॥ भागुरिमते टाप् । तृषापि न कृशाममेति प्रयोगः ॥ शाकुन्तिकोरत्ने ॥

तृषाभूः । स्त्री । क्लोमनि । फोँपडा इतिभाषा ॥

तृषाहम् । न । जले ॥

तृषाहकम् । न । मधुरिकायाम् ॥

तृषाहा । स्त्री । मधुरिकायाम् ॥

तृषितः । त्रि । सतृषि । तृषयायुक्ते ॥ तृट् सञ्जाताऽस्य । तारकादित्वादितच् ॥

तृषितोत्तरा । स्त्री । असनपर्ण्याम् ॥

तृष्णक् । त्रि । लुब्धे ॥ तृष्यति । ञितृष० । तच्छीलः । स्वपितृषोर्नजिङ् ॥

तृष्णा । स्त्री । तर्षे । पिपासायाम् ॥ प्यास इतिभाषा ॥ लिप्सायाम् । अप्राप्ताभिलाषे । अनात्मीयस्वीकारेच्छायाम् ॥ इदं मे न चीयतामितीच्छायाम् ॥ उचितव्ययाकरणेनाधि

यमरावबोध्याशस्तत्र कार्यांशाशमाप तृ ष्णाभेदः ॥ लोभे ॥ या दुस्त्यजा दुर्म तिभि र्जीर्यतो या न जीर्यति । तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ तर्षणम् । जितृष० । तृषि शुषिरसिभ्यःकिदिति नः ॥ विशेषो भावशब्दाश्रयजत्वृष्णायाम् ॥

तृष्णाक्षयः । पुं । शान्तौ ॥ परमानन्द प्राप्तिहेतौ ॥ तथाचवेदव्यासः । य च कामसुखं लोके यच्च दिव्यं मह त्सुखम् । तृष्णाक्षयसुखस्यैते ना र्हतः षोडशीं कलामिति ॥ पिपासा नाशे ॥ तृष्णायाः क्षयः ॥

तृष्णारिः । पुं । पर्पटे ॥ इतिराजनि- र्घण्टः ॥

ते । अ । त्वयेत्यर्थे ॥

तेजःकार्श्यम् । न । घृतादिकार्येष्वग्नि मान्द्यादौ ॥ तेजसःकार्श्यम् ॥

तेजःफलः । पुं । तेजफल इति तेजवल इतिच प्रसिद्धे वृक्षविशेषे । गन्धफ- ले । बहुफले ॥ अस्यगुणास्तु । तेजः फलः कटुस्तीक्ष्णः सुगन्धिर्दीपनोम तः । वातश्लेष्माक्षिमुखवालरुक्- हरः स्मृतइति ॥

तेजनः । पुं । वंशे ॥ मुञ्जे ॥ शरमुञ्जे ॥ तेजयति शत्रु मग्निंवा । तिजनि शाने । णिच् । नन्द्यादित्वाल्ल्युः ॥

तेजनकः । पुं । गुन्द्रे । शराभिधतृणे ॥

तेजयति । तिज० चु० । तृणं कृत्वा ॥

तेजनी । स्त्री । मूर्वायाम् ॥ ज्योतिष्म त्याम् ॥ तेजति । तिजपालने । ल्यु ट् । गौरादिङीष् ॥

तेजपत्रम् । न । गन्धजाते । पत्रके । त्व क्पत्रे । तेजपात इति प्रसिद्धे वृक्षे ॥

तेजलः । पुं । कपिञ्जलपक्षिणि ॥

तेजवती । स्त्री । गजपिप्पलिकायाम् ॥

तेजः । न । दीप्तौ ॥ प्रभावे ॥ पराक्र मे ॥ रेतसि ॥ नवनीते ॥ बले ॥ तापकेज्योतिषि ॥ शरीरगतायां- कान्तौ ॥ सुवर्णे ॥ मज्जनि ॥ पित्ते ॥ असहने ॥ यथा । अधिक्षेपापमा नादेः प्रयुक्तस्य परेणयत् । प्राणात्य येप्यसहनं तत्तेजः समुदाहृतम् ॥ प्रागल्भ्ये ॥ पराभिभवसामर्थ्ये ॥ प रैरनभिभाव्यत्वे ॥ अप्रतिहतत्वे ॥ चैतन्यात्मकेज्योतिषि ॥ स्त्रीबाल कादिभिर्मूढैरनभिभाव्यत्वे ॥ लिङ्ग देहे ॥ हयवेगे ॥ तेजोनाम दर्पा- परनामा सत्त्वगुणविकारः प्रकाश- कोऽन्तःसारविशेषः । यथाहभोज- राजः । तेजो निसर्गजं सत्त्वं वाजि नां स्फुरणं रजः । क्रोधस्तम इतिज्ञे या श्चयोपिसहजा गुणाः ॥ तच्चद्विवि धम् । सततोत्थितं भयोत्थितंचेति

तैरश्री । स्त्री । कुनीस्याम् । रागद्वेषु पविशेषे ॥

तैर्थिकः । पुं । तीर्थकरे । कपिलकणा-भुगादिषु ॥

तैर्य्यग्योनः । पुं । त्रिविधभूतादिसर्गेष्वेकस्मिन् सर्गे ॥ सचपशुमृगपक्षि-सरीसृपस्थावरभेदात् पञ्चविधोभवति ॥

तैलम् । न । तिलसर्षपादिजनितस्नेहे । प्रचये । स्नेहे । तेल इतिभाषा ॥ तिलस्यविकारः । तस्यविकारइत्यऽण् ॥ तिलादिस्नेहवस्तूनां स्नेह स्तैल मुदाहृतम् । तत्तुवातहरंसर्वंविशेषात्तिलसम्भवम् ॥ नास्तितैलात्परं किञ्चिदौषधंमारुतापहम् ॥ तिलतैलं गुरुस्थैर्यबलवर्णकरं सरम् । वृष्यं विकाशि विशदं मधुरं रसपाकयोः ॥ सूक्ष्मं कषायानुरसं तिक्तं वातकफापहम् । वीर्य्योष्णं हिमंस्पर्शे बृंहणं रक्तपित्तकृत् ॥ लेखनं बद्धविण्मूत्रं गर्भाशयशोधनम् । दीपनं बुद्धिदं मेध्यं व्यवायि व्रणमेहनुत् ॥ श्रोत्रयोनिशिरःशूलनाशनं लघुताकरम् । त्वच्यंकेश्यञ्च चक्षुष्यमभ्यङ्गे भोजने ऽन्यथा ॥ छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्चिते । भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते ॥ तथाभिहतनिर्भुग्नमृगव्याघ्रादिविक्षते । बस्तौ पानेऽथ संस्कारे नस्ये कर्णाक्षिपूरणे ॥ सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ॥ * ॥ ननुतैल महंषयोः कथं सामानाधिकरण्य मित्याह । रूक्षादिदुष्टः पवनः स्रोतःसङ्कोचयेद्यदा । रसोऽसम्यग्वहन् कार्श्यं कुर्याद्रक्तादिवर्द्धनम् ॥ तेषु प्रविष्टसरतासौक्ष्म्यस्निग्धत्वमार्द्दवैः । तैलंचमं रसं नेतुं क्षमाणां तेन बृंहणम् ॥ व्यवायि सूक्ष्मतीक्ष्णोष्णसरत्वैर्मेदसःक्षयम् । शनैः प्रकुरुते तैलं तेन लेखन मीरितम् ॥ दृतं पुरीषं बध्नाति स्खलितं तत् प्रवर्त्तयेत् । ग्राहकं सारकं चापि तेन तैलमुदीरितम् ॥ घृत मब्दात्परं पक्वं हीनवीर्यं प्रजायते । तैलं पक्वमपक्वं वा चिरस्थायिगुणाधिकम् ॥ तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम् । अतः शेषस्यतैलस्यगुणाज्ञेयाःस्वयोनिवत् ॥ तैलानांसार्षपादीनां यथास्थानं गुणोदयम् ॥ * ॥ प्रातःस्नाने व्रते श्राद्धे द्वादश्यां ग्रहणे तथा । मद्यलेपसमं तैलं तस्मात्तैलं विवर्जयेत् ॥ इतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम् । अदुष्टं पक्वतैलञ्च तैलाभ्यङ्गे च नित्यशः ॥ * ॥ कर्मभूमंद

मिङ्गद्वयं कीर्तितलाभश्चसोमे भौमे गर्भर्भवति नियतं चन्द्रजे पुत्रलाभः । अर्थम्लानिर्भवति च गुरौ भार्गवे शोकयुक्तः स्तैलाभ्यङ्गात् तनयमरणं स्यात् शनैर्जैर्दीर्घमायुः ॥ सिद्धके ॥

तैलकन्दः । पुं । तिलाङ्कितदले । द्राव ककन्दे ॥ लोहद्रावित्वं कटुत्वमुष्णत्वं वातापस्मारविषशोफनाशित्वं सप्तबन्धकारित्वं देहसिद्धिकारित्व चेत्यस्यगुणा इति राजनिर्घण्टः ॥

तैलकारः । पुं । तेली इति प्रसिद्धे व र्णसङ्करजातिप्रभेदे । धूसरे । चाक्रिके । तैलिनि ॥ कोटकस्त्रीगर्भे कुम्भकाराज्जातोयमिति । ब्र० ब्र० खं ॥

तैलकिट्टम् । न । खल इति भाषाप्रसिद्धे तैलमले । पिण्याके ॥

तैलङ्गः । पुं । अन्ध्रदेशे ॥ श्रीशैलन्तु समारभ्य चोलेशान्मध्यभागतः । तैलङ्गदेशो देवेशि ध्यानाध्ययनतत्परः ॥

तैलचौरिका । स्त्री । तैलपायिकायाम् ॥

तैलद्रोणी । स्त्री । कण्ठपर्यन्तमज्जनार्थं तैलपूर्णकाष्ठादिनिर्मितपात्रविशेषे ॥ तत्रावस्थितिगुणाः । वातरोगव्याकुलरोगपङ्गुवाधिर्यमिन्मिनगद्गदध्वजभङ्गस्तब्धपृष्ठप्रचलितपवनगात्रकम्पकपाटीग्रीवाभङ्गापतन्त्रकयत्पधिरभवमूत्रकृच्छ्रवस्तिरोगेषु प्रशस्त मितिराजवल्लभः ॥

तैलधान्यम् । न । तिलादिषु ॥ तिलातसीचतोरीचद्विविधश्चापिसर्षपः । द्विधाराजीखाखसश्चबीजं कौसुम्भसम्भवम् । एतानितैलधान्यानिप्रोक्तानिपूर्वसूरिभिः ॥

तैलपर्णः । पुं । पर्वतविशेषे ॥ न । ग्रन्थिपर्णे ॥

तैलपर्णकम् । न । ग्रन्थिपर्णद्रव्ये ॥

तैलपर्णिकम् । न । हरिचन्दने ॥ तिलपर्णीवृक्षविशेषे जातम् । तत्रजातइत्यण् । ङीप् । स्वार्थेकन् । केऽण इतिह्रस्वः ॥ तैलपर्णीगिरिस्तत्राकर इतिस्वामी ॥ पुं । चन्दनविशेषे ॥

तैलपर्णी । स्त्री । मलयजे चन्दने ॥ श्रीवासे ॥ सिल्हके ॥ तिलपर्णीवृक्षेजाता । तत्रजातइत्यण् । ङीप् ॥

तैलपा । स्त्री । तैलपायिकायाम् ॥

तैलपायिका । स्त्री । सपक्षकीटविशेषे । परोष्ण्याम् । तिलचटा इति भाषा ॥ तैलं पिबति । पापाने । ण्वुल् ॥

तैलपिपीलिका । स्त्री । पिपीलिकाप्रभेदे । कपिजाङ्घिकायाम् ॥

तैलफलः । पुं । इङ्गुद्याम् ॥ बिभीतके ॥

तैलभाविनी । स्त्री । जातीपुष्पवृक्षे ॥

तैलमाली । स्त्री । वर्त्याम् ॥ दीपवृ

प्याम् ॥

तैलपाता । स्त्री । स्वधायाम् ॥ पतनम् पातः । तिलस्यपातः । तिलपातोऽस्याम् । घञः साऽस्यां क्रियेति ञः । घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे ञः स्यात् तदन्तात् स्त्रियाम् । श्येनतिलस्येति मुम् ॥

तैलसाधनम् । न । गन्धद्रव्यविशेषे । काकोले । कक्कोले । काकला इति गौडेषु प्रसिद्धे कोषफले ॥

तैलस्फटिकः । पुं । तृणमणौ ॥ इ० हे ॥

तैलाक्तः । त्रि । तैलेनसिक्ते ॥

तैलागुरु । न । दाहागुरुणि ॥

तैलाटी । स्त्री । वरटायाम् ॥

तैलाम्बुका । स्त्री । तैलपायिकायाम् ॥

तैलिकः । पुं । तैलकारे । तैलार्थं तिलादिबीजानां पेष्टरि ॥

तैली । पुं । तैलकारे । चाक्रिके ॥ त्रि । तैलसम्बन्धिनि ॥

तैलिनी । स्त्री । दशावर्त्याम् । तैलकीटे । षड्बिन्द्यायाम् ॥

तैलिशाला । स्त्री । तैलिकगेहे । यन्त्रगृहे ॥

तैलीनम् । न । तिल्ये । तिलक्षेत्रे ॥ तिलानां भवनं क्षेत्रम् । विभाषातिलेतिपक्षेखञ् ॥

तैषः । पुं । पौषमासे ॥ तिष्येणयुक्ता पौर्णमासी यस्मिन् । सास्मिन्-पौर्णमासीत्यर्थे सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणित्यण् । तिष्यपुष्ययोर्नक्षत्राणियलोपः । ङीप् ॥ ततःसास्मिन् पौर्णमासीत्यण् ॥

तैषी । स्त्री । पौष्याम् ॥ तिष्येण युक्ता पौर्णमास्यस्मिन् । नक्षत्रेणेत्यण् । तिष्यपुष्ययोर्नक्षत्राणियलोपः । ङीप् ॥

तोकम् । न । अपत्ये । पुत्रदुहित्रोः ॥ तौति । तुः सौत्रो हिंसावृत्तिपूर्त्तिषु । बाहुलकात्कः ॥

तोक्मः । पुं । हरिते ॥ हरिद्वर्णे । अपक्वयवे ॥ पक्वयवाङ्कुरे इति श्रीधरस्वामी ॥ हरिद्वर्णे ॥ न । कर्णमले ॥ तकति तक्यते वा । तकहसनेऽथासेच । बाहुलकान्मः ओत्वञ्च ॥ मेघे ॥ इत्यजयपालः ॥

तोटकम् । न । द्वादशाक्षरपादे जगतीच्छन्दोभेदे ॥ यथा । विनिधेहि चतुःसगणं रुचिरं रविसङ्ख्यकवर्णकृतं सुचिरम् । फणिनायकपिङ्गलसंलपितं कुरु तोटकवृत्तमिदं रुचिरम् ॥ यथा । सकलं मनसा क्रियया जनितं समवेक्ष्य विनाशितयानुगतम् । परिचिन्तनकश्चिदितो निखिलाद्भवि माधिकृतेन न कश्चिदितीति ॥

तोडः । पुं । भेदे ॥ तोडनम् । तुडतो डने ॥ घञ् ॥
तोडनम् । न । दारणे ॥ हिंसने । भेदे ॥
तोत्रम् । न । प्रतोदे । प्राजने । गवादिपशूनां ताडनदण्डे ॥ वेणुके । हस्तिन ताडनदण्डे ॥ तुद्यतेऽनेन । तुदव्यथने । दाम्नीतिष्ट्रन् ॥
तोदः । पुं । व्यथायाम् ॥ तोदनम् । तुद० । घञ् ॥
तोदनम् । न । व्यथने ॥ तोत्रे । वृषभादिप्रेरणदण्डे ॥ तुद० । ल्युट् ॥
तोदितः । त्रि । प्रेरिते ॥
तोमरः । पुं । न । सर्वलायाम् । गडाँसाइति सबली इतिवा ख्याते ऽस्त्रे॥ हस्तक्षेप्यसशल्यदण्डे । रायबांस इतिभाषा ॥ सूचाग्रगदायाम् ॥ वाण्वादि (।ऽ) त्रिकले ॥ इन्दतीछन्दोभेदे ॥ यथा । प्रथमंकरं विनिधाय जगद्वयच्चनिधाय । कुरु तोमरं सुखकारि फणिराजवक्त्रविहारि ॥ यथा । सखि मादके मधुमासि व्रजसम्बरं किमिहासि । सद्रतेनकिं विहरामि किमुपावकं प्रविशामीति ॥
तोमरधरः । पुं । अग्नौ ॥ इतिशब्दा० ॥
तोमरिका । स्त्री । आढक्याम् । तुवर इतिभाषा ॥
तोयम् । न । अम्बुनि । जले ॥ एतच अमृतं तोय मभक्ष्यं सर्वसंज्ञकम् ॥ अमृतं वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तुल्यं स्यादित्याह प्रजापतिः ॥ अगन्धमव्यक्तरसं शीतञ्च तृषापहम् । अच्छं लघु च पथ्यञ्च तोयंगुणवदुच्यते ॥ तौति । तु: सौत्रःगत्यर्थः । औणादिकोयः ॥ पूर्वाषाढायाम् ॥
तोयकामः । पुं । अम्बुवेतसे । परिव्याधे ॥ त्रि । जलाभिलाषिणि ॥
तोयकृच्छ्रम् । न । जलमात्रपानरूपव्रतविशेषे ॥ इतिमिताक्षरा ॥
तोयडिम्भः । पुं । घनोपले ॥ इ०शा० ॥
तोयदः । पुं । मेघे ॥ मुस्तके ॥ न । आज्ये ॥ त्रि । जलदातरि ॥ जलदानमाहात्म्यंमहाभारते दानधर्मे । अन्नदस्तेनरेन्द्र प्राणदस्तावदन्तु त । प्राणदानाद्धि परमंनदान मिह विद्यते ॥ अन्नं वापिप्रभवति पानीयात् कुरुसत्तम । नीरजातेन हि विना न किञ्चित् संप्रवर्त्तते ॥ अग्नौ षधोमहाराज वीरुधश्चजलौषधाः । यतः प्राणभृतां प्राणाः सम्भवन्ति विशांपते ॥ तस्मात्पानीयदानाद्धि न परं विद्यते क्वचित् । तच्चद्यात्करो नित्यंयदीच्छेद्भूतिमात्मनः ॥ धन्यं यशस्य मायुष्यं जलदानं विशाम्पते

। यथं स्नात्वाप्यधि कौन्तेय सदा तिष्ठति तोयदः ॥ सर्वकामानवाप्नोतिकीर्त्तिं चैवेह शाश्वतीम् । प्रेत्य चानन्त्य मश्नाति पापेभ्यश्च प्रमुच्यते ॥ तोयदो मनुजव्याघ्र स्वर्गं गत्वामहाद्युते । अक्षयान् समवाप्नोतिलोकानित्य-ब्रवीन्मनुरिति ॥ तोयंददाति । डुदाञ्° । कः ॥

तोयधरः । पुं । मुस्तायाम् ॥ सुनिषस्साख्यभेषजे ॥ घने । मेघे ॥ तोयस्यधरः ॥

तोयधिः । पुं । उदन्वति । समुद्रे ॥ तोयानि धीयन्तेऽत्र । डुधाञ्° । कर्मण्यधिकरणेचेतिकिः । आतोलोपः ॥

तोयधिप्रियम् । न । लवङ्गे ॥

तोयनिधिः । पुं । अब्धौ । समुद्रे ॥ तोयानि निधीयन्तेऽत्र । डुधाञः किः ॥ तोयानां निधिर्वा ॥

तोयपिप्पली । स्त्री । लाङ्गल्याम् । शकुलादन्याम् । गौडभाषया काँचड़ा इति प्रसिद्धे जलजशाके ॥ तोयस्य पिप्पलीव ॥

तोयपुष्पी । स्त्री । पाटलावृक्षे ॥

तोयप्रसादनः । पुं । न । कतके ॥ षष्ठी समासः ॥

तोयप्रसादनफलम् । न । कतकफले ॥

तोयफला । स्त्री । इर्वारौ ॥

तोयवल्ली । स्त्री । कारवेल्ले ॥

तोयशाला । स्त्री । प्रपायाम् ॥

तोयशुक्तिका । स्त्री । जलशुक्तौ ॥

तोयसूचकः । पुं । भेके ॥ इ० शब्दा० ॥

तोयात्मा । स्त्री । विष्णौ ॥ यथा । यस्य केशेषुजीमूता नद्यः सर्वाङ्गसन्धिषु । कुक्षौसमुद्राश्चत्वार स्तस्मै तोयात्मनेनमइति ॥

तोयाधिवासिनी । स्त्री । पाटलावृक्षे ॥

तोयेशः । पुं । वरुणे ॥ शतभिषायाम् ॥

तोरणः । पुं । न । बहिर्द्वारे । द्वारबाह्यभागे ॥ स्तम्भोपरि चिते सिंहद्वाराख्ये ॥ तुरन्त्यत्र । तुरत्वरणहिंसयोः । अधिकरणे ल्युट् युच्वा ॥ तोरयन्त्यत्रेतिवा । तुरउन्माने । रलयोरेकत्वम् ॥ ततुरन्त्यनेनवा । तुरत्वरणे । जौहोत्यादिकः ॥ न । कन्धरायाम् ॥ कन्धरातोरणं करोतीति हारावली ॥

तोलः । पुं । न । गुञ्जाशीतिसम्मिते । तोलके ॥

तोलकः । पुं । न । कोले । द्रङ्क्षणे । वटके । कर्षार्द्धे । अशीतिगुञ्जामिते ॥ षोडशमाषके पञ्चवतिरक्तिकापरिमाणे । तोला इतिभाषा । कर्षे ॥ इतिवैद्यकपरिभाषा ॥

तोषः । पुं । तुष्टौ ॥

तौच्छिकः । पुं । धनूराशौ ॥

तौलातिकम् । न । तुलातभङ्गकृतेमी मांसाशास्त्रे ॥

तौलिकः । पुं । शुक्तौ ॥ न । मुक्तायाम् ॥

तौरङ्गिकः । पुं । अश्वारोहे । सादिनि ॥

तौरायणिकः । पुं । यजमाने ॥ तुरायणं यज्ञविशेषं निर्वर्त्तयति । पारायण तुरायणेत्यादिना ठञ् ॥

तौर्य्यम् । न । तूर्य्यमुरजादौ भवेशब्द रूपे ॥

तौर्य्यत्रिकम् । न । नृत्यगीतवाद्येषु समुदितेषु ॥ तुरीत्वरायाम् । कृ धलोऽर्य्यम् । गुणं बाधित्वा बाहुल कादुलिचेतिदीर्घः । तूर्य्यमुरजादि तत्रभवं तौर्य्यंशब्दः । त्रयोंशा यस्य तत् त्रिकम् । सङ्ख्याया अतिशदन्ता याःकन् । तौर्य्योपलच्चितं त्रिकमिति विग्रहः ॥

तौलः । पुं । तुलाराशौ । तौलिनि ॥ त्रि । तुलासम्बन्धिनि ॥

तौलिकः । पुं । चित्रकारे ॥

तौलिकिकः । पुं । चित्रकारे । रङ्गाजीवे ॥

तौल्यम् । त्रि । तुलया परिच्छिन्ने ॥ तुल्यमेव । स्वार्थे ष्यञ् ॥

तौषारम् । न । दिव्योदकविशेषे । तुषारजले ॥ अपि मताः समुद्रान्ते वह्निरापस्तदुद्भवाः । धूमावयवनिर्मुक्तास्तौषाराख्यास्तुताः स्मृताः ॥ अपथ्याः प्राणिनां प्रायो भूरुहाणान्तु ता हिताः ॥ तुषाराम्बु हिमं रूक्षं स्याद्वा तलं मपित्तलम् । कफोरुस्तम्भकण्ठाग्निमेहगण्डादिरोगनुत् ॥ नदी मारभ्य समुद्रपर्य्यन्तंवह्निरास्ते तद्भवा वह्निभवाः धूमावयवनिर्मुक्ताः धूमांशरहिता आपः तुषाराख्याः स्मृताः ॥ तुषारस्येदम् । तस्येदमित्यण् ॥

त्यक्तः । त्रि । हीने । विधूते । समुज्झिते । कृतत्यागे । छोडा इतिभाषा ॥ त्यज्यतेस्म । त्यजहानौ । क्तः ॥

त्यक्तव्यः । त्रि । त्यजनीये ॥

त्यक्तसर्व्वपरिग्रहः । त्रि । समस्तभोगोपकरणरहिते विरक्ते ॥ त्यक्ताः सर्वे परिग्रहा येन ॥

त्यजनम् । न । त्यागे । वर्ज्जने ॥

त्यः । त्रि । तच्छब्दार्थे ॥ सर्वादिः । त्यजति । त्यज० । त्यजितमियजिभ्यो-ड्डिदित्यादिः ॥ स्त्रियां त्या । क्लीबे त्यत् ॥ वाच्याकाशयोः ॥

त्यागः । पुं । दाने । अर्थिषु मुक्तहस्ततायाम् । धर्मेणोपार्जितार्थस्य सत्पात्रे विनियोगे ॥ वर्ज्जने ॥ सर्वकर्मफलाभिसन्धिवर्जने । कर्माधिकारिक

त्यागः

र्त्तृकफलाभिसन्धिपूर्वककर्मत्यागे ॥ स च सात्त्विकादिभेदात् त्रिविधो भवति ॥ यथा । नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्याग स्तामसः परिकीर्त्तितः ॥ १ ॥ दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ २ ॥ कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥ ३ ॥ अपिच । विशेषणाभावात् विशेष्याभावात् उभयाभावाच्च त्रिविधो भवति । तथाहि । फलाभिसन्धिपूर्वककर्मत्यागः सत्यपि कर्मणि फलाभिसन्धित्यागादेकः १ । स च सात्त्विकत्वादादेयः ॥ सत्यपि फलाभिसन्धौ कर्मत्यागात् द्वितीयः २ । स च दुःखबुद्ध्याकृतो राजसः विपर्यासेन कृतस्तामसः इति भेदात् द्विविधो हेयो भवति ॥ फलाभिसन्धेः कर्मणश्च त्यागात् तृतीयः ३ । स च कर्मानधिकारिकर्त्तृको नैर्गुण्यरूपः ॥ सोऽपि साधनफलभेदेन द्विविधः । तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्य आत्मज्ञानसाधनश्रवणाख्य वेदान्तविचा-

त्यागी

राय फलाभिसन्धिरहितस्यापि कर्मणः कर्मणि परित्यागः कर्त्तव्य इति तत्साधनस्य कर्मणो वैतृष्ण्ये जातद्वारा ऽवहननस्य परित्यागः स एकः साधनभूतो विविदिषासन्न्यास उच्यते ॥ द्वितीयस्तु जन्मान्तरकृतसाधनाऽभ्यासपरिपाकाद्वस्मिन् जन्मनि आदावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य स्वत एव फलाभिसन्धेः कर्मणश्च परित्यागः फलभूतः स विद्वत्सन्न्यास इत्युच्यते ॥ * ॥ त्यागः प्रपञ्चरूपस्य चिदात्मत्वावलोकनात् । त्यागो हि महतां पूज्यः सद्यो मोक्षमयो यतः ॥ * ॥ त्यागेन युक्ता दिवमुत्पतन्ति त्यागेन हीना नरकं व्रजन्ति । न त्यागिनां दुष्करमस्ति किञ्चित् त्यागो हि सर्वव्यसनानि हन्ति ॥ त्यजनम् । त्यजहानौ । घञ् ॥ विवेकिपुरुषे ॥ इति शब्दरत्नावली ॥ उपेक्षायाम् ॥

त्यागफलम् । न । ज्ञाननिष्ठायाम् ॥

त्यागी । त्रि । दातरि ॥ शूरे ॥ वर्जनशीले ॥ सात्त्विकत्यागेन युक्ते ॥ न द्वेष्ट्यकुशलं कर्म कुशले नानुसज्जते । त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥

त्यजति तच्छीलः । सम्पृचानुरुधेति घिनुण् ॥

त्यागिमः । त्रि । त्यागजे ॥ त्यागेन निर्वृत्तः । भावप्रत्ययान्तादिमप् ॥

त्याजितः । त्रि । विसर्जिते ॥ त्यजेर्ण्यन्तात् द्विकर्मकात् कर्मणि क्तः । ण्यन्ते कर्तुश्च कर्मणामित्युक्तेः ॥

त्याज्यः । त्रि । त्यागयोग्ये । वर्जनीये । वर्ज्ये ॥ तीरे प्रतिग्रहस्त्याज्यो त्याज्योधर्मस्य विक्रयः ॥ अपिच । पित्रं अतिशयंमन्त्रं शोधितं वाप्यशोधितम् । त्याज्यो भवति कौलानां दण्डनीयो ऽपिभूभृत इति ॥ त्यजेश्चेति ण्यति कवर्गादेशाभावः ॥

त्रङ्कः । पुं । प्रतिमार्गे ॥

त्रङ्का । स्त्री । प्रतिमार्गे । उद्गङ्के ॥

त्रपः । पुं । सलज्जे ॥ त्रपते । त्रपूष् लज्जायाम् । पचाद्यच् ॥

त्रपा । स्त्री । लज्जायाम् ॥ कुलटायाम् ॥ त्रपतेऽनया । त्रपूष्० । षिद्भिदादिभ्योऽङ् । टाप् ॥ कुले ॥ कीर्त्तौ ॥ इतिशब्दरत्नावली ॥

त्रपाकः । पुं । म्लेच्छविशेषे ॥

त्रपारण्डा । स्त्री । वेश्यायाम् ॥

त्रपिष्ठः । त्रि । तृप्रतमे ॥ अयमेषामतिशयेनतृप्रः । अतिशायने इष्ठन् । प्रियस्थिरेति तृप्रस्यत्रबादेशः ॥



त्रपीयान् । त्रि । तृप्रतरे ॥ अतिशयेन तृप्रः । द्विवचनविभज्येति ईयसुन् ॥ प्रियस्थिरेति तृप्रस्यत्रबादेशः ॥

त्रपु । न । सीसके ॥ रङ्गे ॥ अग्निं दृष्ट्वा त्रपते लज्जतइव । त्रपूष० । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युः ॥

त्रपुकर्कटी । स्त्री । त्रपुष्याम् ॥

त्रपुटी । स्त्री । सूक्ष्मैलायाम् ॥ इ० र० मा० ॥

त्रपुलम् । न । रङ्गे । राँग इति भाषा ॥

त्रपुषम् । न । कर्कटीप्रभेदे । सुधावासे । सुशीतले । लघुखीरा बालमखीरा इत्यादिभाषा ॥ त्रपुषं लघु नीलञ्च नवं तृट्क्लमदाहजित् । स्वादुपित्तापहं शीतं रक्तपित्तहरं परम् ॥ तत् पक्वमम्लमुष्णं स्यात् पित्तलं कफवातनुत् । तद्बीजं मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित् ॥

त्रपुषी । स्त्री । कर्कट्याम् । खीरा इति भाषा ॥

त्रपु० । न । } रङ्गे ॥
त्रपुसम् । न । }

त्रपुसी । स्त्री । महेन्द्रवारुण्याम् ॥ कर्कट्याम् ॥ लताविशेषे । पीतपुष्पायाम् । खीरा इति भाषा ॥

त्रयम् । न । त्रितये ॥ त्रयोऽवयवाः अस्य । सङ्ख्यायाअवयवेतयप् । द्वि

श्यांतवस्त्रायन्ना ॥

त्रयी । स्त्री । त्रिवेद्याम् । ऋग्यजुःसामाख्यश्रुतिचये ॥ ब्रह्माऽथपुरुषो रुद्रस्त्रयमेतत् त्रयीमयम् । सर्गादावृग्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः । रुद्रःसाममयोऽन्ताय तस्मात् तस्याशुचिर्ध्वनिः ॥ पुरन्ध्र्याम् ॥ सुमतौ ॥ सोमराजीवृक्षे ॥ भवान्याम् । दुर्गायाम् ॥ यथा । ऋग्यजुःसामभागेन साङ्गवेदगताप्रिया । त्रयीति पठ्यते लोकेदृष्टादृष्टार्थसाधिनीति देवी पुराणम् ॥ त्रितये ॥ टिड्ढेतिङीप् ॥

त्रयीतनुः । पुं । सूर्य्ये ॥ त्रयी तनुर्यस्यसः ॥

त्रयीधर्म्मः । पुं । त्रय्या विधीयमाने ज्योतिष्टोमादिकर्म्मणि ॥ त्रय्याःधर्मः त्रयीधर्मः ॥

त्रयीमुखः । पुं । ब्राह्मणे ॥ त्रयी मुखे यस्य ॥

त्रयोदशः । त्रि । त्रयोदशानाम्पूरणे ॥ तस्यपूरणेडट् ॥

त्रयोदश । त्रि । सङ्ख्याविशेषे १३ । तेरह इति भाषा ॥ सङ्ख्येये ॥ त्रयश्च दश च । त्र्यधिकादशेति वा । त्रेस्त्रय इतित्रयस् । बह्वोत्वगुणाः ॥

त्रयोदशी । स्त्री । तिथिविशेषे ॥ सा च शुक्ल त्रयोदशकलाक्रियारूपा च



योदशकलाक्रियावच्छिन्नकालरूपा वेति तिथ्यादितत्त्वम् ॥ रूपान्वितः सात्त्विकभाववीनः सुखी च बाल्ये जनतीप्रियश्च । सदालसः शिल्पगुणैकवेत्ता त्रयोदशी जन्मतिथिर्यदि स्यात् ॥

त्रय्यात्मा । पुं । सूर्य्ये ॥ त्रयीआत्मास्वरूपंयस्य ॥

त्रसम् । न । वने ॥ त्रि । जङ्गमे ॥ त्रसति । त्रसीउद्वेगे । पचाद्यच् ॥

त्रसनः । त्रि । सन्त्रासयुक्ते ॥

त्रसरः । पुं । तन्तुवायोपकरणविशेषे । सूत्रवेष्टने । तासनी इति गौडभाषा ॥ त्रसनम् । त्रसी० । अरन् ॥

त्रसरेणुः । पुं । परमाणुषट्के । संयुक्तद्व्यणुकत्रये ॥ जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥ वैद्यकपरिभाषया त्रिंशत् परमाणुपरिमाणे । ध्वंस्याम् ॥ यथा । जालान्तरगतेसूर्यकरे ध्वंसीविलोक्यते । त्रसरेणुस्तु विज्ञेय स्त्रिंशता परमाणुभिरिति ॥ स्त्री । सूर्यपत्न्याम् ॥

त्रस्तः । त्रि । भीते ॥ चकिते ॥ न । शीघ्रे ॥

त्रस्नुः । त्रि । त्रासशीले । भीरौ ॥ त्रस्यति । त्रसी० । त्रसिगृधिधृषिक्षिपेः

ज्ञः । नेडुशीतिनेट् ॥

चायम् । न । चायमाणायामोषधौ ॥ र क्षणे ॥ चि । रक्षिते ॥ चायतेस्म । चैङ् पालने । क्तः । नुदविदेतिपक्षेनत्त्वम् ॥ रक्षके ॥ चायते । कर्त्तरिल्युट्वा ॥

चाणा । स्त्री । चायमाणायाम् ॥

चात: । त्रि । रक्षिते ॥ चायतेस्म । चैङ्० । क्तः । नुदविदोन्दचाघाह्रीभ्यो न्यतरस्यामितिपक्षेनत्त्वाभाव: ॥

चाता । त्रि । पालयितरि ॥ चायते । चैङ्० । तृच् ॥

चान्तः । पुं । चावसाने शब्दे ॥ चोऽन्तोय स्य । यथा । यावान् कश्चित् चान्त: शब्दोऽयं नपुंसकेतु वोद्धव्य: ॥ यथा । पत्रच्छत्रचर्मभित्रकलत्रादयो नपुंसका: पठ्यन्ते ॥

चापुषम् । त्रि । चपुषोविकारे ॥ चपुज तुनो: षुगित्यण् ॥

चायन्ती । स्त्री । वार्षिके । चायमाणायाम् । बलभद्रिकायाम् ॥ चायंचा: । संपदादित्वात् क्विप् । चाम् अयति । इगतौ । शतृप्रत्यय: । उगितश्चे तिङीप् ॥ चायन्ती तुवरा तिक्ता सरा पित्तकफापहा । ज्वरहृद्रोगगुल्मास्रभ्रमशूलविषप्रणुत् ॥

चायमाणः । त्रि । रक्ष्यमाणे ॥

चायमाणा । स्त्री । वला इति बहुला इतिच गौडभाषाप्रसिद्धायां देववल्लायाम् । वार्षिकौषधौ । चायन्त्याम् ॥ अस्यागुणा यथा । शीतत्वंमधुरत्वं गुल्मज्वरकफास्रभ्रमतृष्णाक्षयग्लानिविषच्छर्दिविनाशित्वमिति राजनिर्घण्टः ॥ चायते । चैङ्० । शानच् चानश् वा ॥

चास: । पुं । भये ॥ चसीउद्वेगे । घञ् ॥ मनोर्द्धिषे ॥

चासजिह्म: । त्रि । भयक्लिष्टे ॥ चासेन जिह्म: ॥

चासदायी । त्रि । भयदातरि । शङ्कुरे ॥ इति हेमचन्द्रः ॥

चासनः । त्रि । भयावहे ॥

चय: । पुं । त्रिसङ्ख्यायाम् । तीनइति भाषा ॥ त्रि । सङ्ख्येये । त्रिसङ्ख्याविशिष्टे ॥ यथा चयोदेवा:नतुदेवानांचय: ॥ तरति । तॄ० । तरतेर्ड्रिः । चय: चीन् विश्वरूप्यादिरूपाणि ॥ तिस्रोभार्याश्चित्राणास्त्रयोभृत्याश्च वान्धवा: । ध्रुवंवेदविरुद्धाश्च नश्यन्ते मङ्गलप्रदा: इतिब्रह्मवैवर्त्तपुराणम् ॥

चिंश: । त्रि । चिंशत्तमे । तीसवाँ इति भाषा ॥ चिंशत:पूरण: । तस्यपूरणे डट् ॥

चिंशक: । त्रि । चिंशद्भि:क्रीते ॥ चिंश

त्रिंशदभ्यां वुन् संज्ञायामित्यसंज्ञायामार्हीयेष्वर्थेषु वुन् । टिलोपः ॥

त्रिंशत् । स्त्री । सङ्ख्याविशेषे । तीस इति भाषा ॥ सङ्ख्येये ॥ त्रयोदशतः परिमाणमस्य । पङ्क्ति विंशति त्रिंशच्चत्वारिंशदिति निपातनात् प्रकृतेस्त्रिन् भावः शच्च प्रत्ययः ॥

त्रिंशत्पत्रम् । न । कुमुदे । कैरवे ॥ त्रिंशत्सङ्ख्यकानि पत्राणि यस्मिन् तत् ॥

त्रिंशांशः । पुं । राश्यंशत्रिंशदंशे ॥ यथा । पञ्चपञ्चाष्टद्विवाणा विषमे त्रिंशदंशकाः । माहेयशनिजीवज्ञशुक्राणां व्युत्क्रमात्समे ॥ विषमराशौ कुजशनिगुरुबुधशुक्राणां पञ्चपञ्चाष्टसप्तपञ्चमितास्त्रिंशदंशकाः क्रमात् ज्ञेयाः । समराशौ व्युत्क्रमात् तेषां विपर्यये त्रिंशांशा ज्ञेयाः ॥ यथा मेषो विषमराशिः तत्र प्रथमावधि पञ्चांशा भौमस्य । षष्ठांशमारभ्य दशमांशपर्यन्तं पञ्चांशाः शनेः । एकादशांशमारभ्याष्टादशांशपर्यन्तमष्टावंशा गुरोः । ऊनविंशांशमारभ्य पञ्चविंशांशपर्यन्तं सप्तांशा बुधस्य । ततः षड्विंशांशमारभ्य त्रिंशांशपर्यन्तं पञ्चांशाः-शुक्रस्य त्रिंशांशाः क्रमात् ज्ञेयाः । मिथुनसिंहतुलाधनुःकुम्भेष्वप्येवम् ॥



समराशौ व्युत्क्रमाद्यथा । वृषे प्रथमांशमारभ्य पञ्चांशा भृगोः । ततो द्वादशांशपर्यन्तं सप्तांशा बुधस्य । ततो विंशांशपर्यन्तमष्टावंशा गुरोः । ततः पञ्चविंशांशपर्य्यन्तं पञ्चांशाः शनेः । ततस्त्रिंशदंशपर्यन्तं पञ्चांशाः कुजस्य त्रिंशांशाः ॥ एवं कर्ककन्यावृश्चिकमकरमीनेष्वपि बोध्याः ॥

त्रिकम् । न । पृष्ठाधरे । पृष्ठवंशाधोभागे । कटिभागे ॥ त्रये ॥ त्रिपथसंस्थाने ॥ त्रिफलायाम् ॥ त्रिकटुनि ॥ त्रिमदे ॥ यथा । गुडूचीसारसंयुक्तात् त्रिकषयसमन्वयात् । वातरक्तं निहन्त्याशु सर्वरोगहरस्त्वयः ॥ त्रयाणां सङ्घः । सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति कन् ॥ तृतीयके ॥ तृतीयेन रूपेण ग्रहणं ग्रन्थस्य । तावतिथं ग्रहणमिति लुग्वेति कन् पूरणप्रत्ययस्य च वा लुक् ॥ पुं । गोक्षुरे ॥

त्रिककुत् । पुं । त्रिकूटाचले ॥ त्रीणि ककुत् सदृशानि शृङ्गाण्यस्य ॥

त्रिककुद्धामा । पुं । विष्णौ ॥ ऊर्द्धाधोमध्याभेदेन तिसृणां ककुभां धामाश्रयोऽयः ॥ तिसृणां ककुभां दिशां समाहार इति विग्रहे तद्धितार्थोत्तरपदसमाहारे चेति समाहारे द्विगुरेकवचनमित्येकवद्भावे समपुंस-

कमितिनपुंसकत्वमेव त्रिककुप् तस्य धाम अधिष्ठानं प्रकाशोवेति। इदञ्च समासात्मकमेकंनाम। त्रिस्रःकाकुभामितिभाष्यंन विग्रहप्रदर्शकं किन्तु फलितार्थकथनम् ॥

त्रिकटः। पुं। गोक्षुरके ॥

त्रिकटु। न। कटुत्रिके। त्र्यूषणे। व्योषे ॥ विश्वोपकुल्यामरिचं त्रयं त्रिकटु कथ्यते॥ त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान्। गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान् ॥ त्रयाणां कटूनां मरिचशुण्ठिपिप्पलीनां समाहारः॥

त्रिकण्टः। पुं। गोक्षुरके ॥ पञ्चगुप्ते। कच्छपीप्रभेदे। तिकांटायुक्त इतिभाषा ॥ टेङ्गरा इतिगौडप्रसिद्धे मत्स्ये ॥ न। कण्टकत्रये। मिलित वृक्षत्रयस्थितदमनीदुस्पर्शात्रयरूपे ॥ त्रीणि कण्टकानि यस्य यस्मिन्वा ॥

त्रिकण्टकः। पुं। गोक्षुरकवृक्षे ॥ लघुगर्गमत्स्ये ॥

त्रिकर्मकृत्। पुं। इज्याध्ययनदानानां कर्त्तरि ॥

त्रिकशूलम्। न। वातजन्यव्यथाविशेषे ॥ स्फिगस्थ्नोः पृष्ठवंशास्थ्नो यः सन्धिस्तत् त्रिकं स्मृतम्। तत्र वातेन या पीडा त्रिकशूलं तदुच्यते ॥

त्रिका। स्त्री। कूपस्थनेमौ। कूपस्थान्ते रज्ज्वादिधारणयन्त्रे ॥ तिस्रो ऽस्र्यो ऽस्याः। सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्वितिकन् ॥

त्रिकायः। पुं। सुगते ॥ त्रयःकाया अस्य ॥

त्रिकार्षिकम्। न। मिलितनागराऽतिविषामुस्तात्रयरूपे ॥

त्रिकालम्। न। कार्यकालतत्पूर्वापरकालेषु ॥

त्रिकालज्ञः। त्रि। सर्वज्ञे ॥ पुं। बुद्धे ॥ त्रिकालं जानाति। ज्ञा०। आतइ-त्विकः ॥

त्रिकालदर्शी। पुं। मुनौ ॥ त्रि। सर्वज्ञे। भूतभविष्यद्वर्त्तमानवेत्तरि ॥ त्रिकालं पश्यति। दृशिर्०। सुप्या दिस्वाच्छिनिः ॥

त्रिकालवित्। पुं। बुद्धे ॥ त्रि। त्रिकालज्ञे ॥ त्रिकालं वेत्ति। विद०। क्विप् ॥

त्रिकूटः। पुं। त्रिककुत्पर्वते। लङ्कापुराधारे। सुवेले ॥ क्षीरोदार्णवतीरवर्त्तिनिशैलविशेषे। यत्र गजेन्द्रो गरुडगामिना श्रीनारायणेनोद्धृतः। अस्य वर्णनं वामनपुराणे द्रष्टव्यम् ॥ न। सामुद्रलवणे ॥

त्रिकूटपर्वतः। पुं। तीर्थविशेषे ॥

त्रिकूटलवणम्। न। शोणीलवणे ॥

चिकोणम् । न । लग्नात् नवमपञ्चम स्थानयोः ॥ योनौ ॥ कामरूपपीठे ॥ करतोयां समारभ्य यावद्दिक्करवासिनी । शतयोजनविस्तारं चिकोणं सर्वसिद्धिदम् ॥ चि । त्र्यस्रे ॥

चिकोणफलम् । न । शृङ्गाटके ॥

चिचारम् । न । चारचये ॥

चिचुरः । पुं । कोकिलाचवृक्षे ॥

चिचम् । न । चपुषे ॥

चिखट्टम् । न । खट्वाचये ॥ तिसृणां खट्वानां समाहारः ॥

चिखट्टी । स्त्री । चिखट्टे ॥ द्विगोरिति ङीप् ॥

चिगङ्गम् । न । तीर्थविशेषे ॥

चिगणः । पुं । चिवर्गे ॥ चयाणांधर्मार्थकामानां गणः ॥

चिगर्त्तः । पुं । सुशर्माख्यनृपतेर्देशे । जालन्धरे ॥ तद्देशजे चिगर्त्ताः ॥ गणितान्तरे ॥

चिगर्त्तकः । पुं । चिगर्त्ते ॥ चिगर्त्तएव । स्वार्थे कः ॥

चिगर्त्ता । स्त्री । कामुकाङ्गनायाम् ॥ घुर्घुरिकायाम् ॥

चिगुणम् । न । प्रधाने । प्रकृतौ ॥ चयोगुणाःसुखदुःखमोहा अस्येतिव्युत्पत्तेः । तदनेन सुखादीनामात्मगुणत्वं पराभिमतं पराकृतं भवति ॥

व्यक्ते ॥ सत्त्वरजस्तमस्सु ॥ चयाणां गुणानां समाहारः ॥ चि । गुणचययुक्ते ॥

चिगुणा । स्त्री । तुल्यगुणचयात्मिकायां प्रकृतौ ॥

चिगुणाकृतम् । न । चिहल्ये । चिःकृष्टक्षेचे ॥ चिगुणङ्कृतम् । सङ्ख्यायाश्चगुणान्ताया इतिडाच् ॥

चिगुणात्मकम् । न । अज्ञाने ॥ गुणास्तोहितशुक्लकृष्णाः अज्ञानकार्येषु तेजोवन्नेष्व वान्तरप्रकृतिषु श्रुतिप्रसिद्धाः । तथाच कार्यगतचिरूपेण कारणमप्यज्ञान मव्याकृतात्मकं चिरूपेण चिगुणात्मकम् । यद्वा रजसत्त्वतमोलक्षणास्त्रयोगुणास्तद्युक्तमज्ञानं गुणगुणिनो रभेदविवक्षयाचिगुणात्मकं भवति ॥ चयोगुणा आत्मानो यस्य ॥

चिगुणितः । चि । चिराहत्तकृते ॥

चिजटा । स्त्री । राक्षसीविशेषे ॥ सीतापक्षपातिनीयं रावणालये ॥ चिलटके ॥

चिजातम् । न । समानतया मिलिते षुत्वगेलापत्रेषु ॥ यथा । एलादिचिभिरुद्दिष्टं चिजातं चिसुगन्धिकम् । चतर्जातं सनागन्तु द्दयंवातकफापहमिति ॥

 

त्रिजातकम् । न । त्रिसुगन्धौ । तुल्यांशु त्वगेलापत्रकेषु ॥ एतच्च रोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत् । लघु पित्ताग्निकृत् वर्ण्यं कफवातविषापहम् ॥ त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तं चा तुर्जातक मुच्यते ॥

त्रिणता । स्त्री । धनुषि ॥ त्रिषु स्थानेषु नता । पूर्वपदात्संज्ञायामिति णत्वम् ॥ टाप् ॥

त्रिणाचिकेत: । पुं । अध्वर्युव्रते ॥ तद्योगात् पुरुषे ॥ त्रि:कृत्वो नाचिकेतोऽग्निश्चितो येन तस्मिन् ॥ तद्विद्यान तदध्ययन तदनुष्ठानवान् वा य स्तस्मिन् ॥

त्रिणेत्र: । पुं । त्र्यम्बके । हरे ॥ त्रि । नेत्रत्रयविशिष्टे ॥ त्रीणि नेत्राणि यस्य । पूर्वपदात् संज्ञायामग इति गिरिन द्यादीनांवेति वा णत्वम् ॥

त्रितयम् । न । तत्त्वानां त्रये ॥ त्रयाणां तत्त्वानां समाहार: ॥

त्रितयम् । न । त्रये ॥ त्रयोऽवयवा अस्य । सङ्ख्याया अवयवेतयप् ॥

त्रिदण्डम् । न । वाक्दण्डमनोदण्डकायदण्डाख्ये दण्डविशेषे ॥ पुं । सन्न्यासाश्रमे ॥ यथा । यस्त्वसंयतषड्वर्ग: प्रचण्डेन्द्रियसारथि: । ज्ञानवैराग्यरहित स्त्रिदण्ड मुपजीवती तिविष्णुभागवतम् ॥ त्रयाणां दण्डानां समाहार: ॥ त्रिदण्डमस्त्यस्य । अच् ॥

त्रिदण्डी । पुं । त्रिदण्डधारिणि सन्न्यासिविशेषे ॥ वाङ्मन:कायानां निषिद्वाभिधानासत्सङ्कल्पप्रतिषिद्वव्यापार त्यागवति ॥ यथा मनु: । वाग्दण्डोथ मनोदण्ड: कायदण्ड स्तथैव च । यस्यैते निहितावुद्वौ त्रिदण्डीतिसउच्यते इति ॥ त्रिदण्डमस्यास्ति । इनि: ॥

त्रिदला । स्त्री । गोधापदीलतायाम् ॥

त्रिदलिका । स्त्री । चर्मकषायाम् ॥ इति शब्दचन्द्रिका ॥

त्रिदश: । पुं । देवे । निर्जरे ॥ तृतीया यौवनाख्या दशा यस्य स: । त्रिश ब्दस्यतृतीयार्थता त्रिविभागवत् । त्रिदशयो:सङ्ख्ययेतिबहुव्रीहि: । बहुव्रीहौसङ्ख्येयेडजबहुगणात् इतिडच् ॥ त्रीन् तापान् दशति । दंशदशने । मूलविभुजादित्वात् क: । पृषोदरादित्वान्नलोप इति वा ॥ जन्मसत्ताविनाशाख्या स्तिस्रोदशा: यस्य । ननु मर्त्यानामिव बाल्ययौवनवार्द्धक्याख्या: ॥ त्रयस्त्रिंशद्देवमुख्यगण ॥ त्र्यधिका स्त्रिंशत्सङ्ख्या त्रिदशा: । अधिकान्तरूपार्थोन्तर्भावेनैकार्थीभाव: । ते च अर्कादादश रुद्राएकादश वसवोष्टौ विश्वेदेवौ द्वाविति ॥ एकएवाच

शब्दस्यान्येकोभयार्थे इति ह्रस्वताधिका राशिदशमारभ्य व्याख्यातः॥

त्रिदशगोपः। पुं। इन्द्रगोपकीटे॥

त्रिदशदीर्घिका। स्त्री। स्वर्गङ्गायाम्॥

त्रिदशमञ्जरी। स्त्री। तुलस्याम्॥

त्रिदशवर्त्म। न। नभसि॥ त्रिदशानां वर्त्म।

त्रिदशाचार्य्यः। पुं। जीवे। सुरगुरौ॥ त्रिदशानाम् आचार्यः॥

त्रिदशाधिपः। पुं। शक्रे॥

त्रिदशाध्यक्षः। पुं। विष्णौ॥ गुणावेशेन सञ्जातानां तिसृणां दशानां आग्रदादीनां अध्यक्षः स्वामी॥ त्रिदशानां देवानां वा अध्यक्षः॥

त्रिदशायुधम्। न। वज्रे॥

त्रिदशारिः। पुं। दैत्ये॥ त्रिदशानाम् अरिः॥

त्रिदशालयः। पुं। स्वर्लोके॥ त्रिदशानाम् आलयः॥ सुमेरुपर्व्वते॥

त्रिदशावासः। पुं। त्रिविष्टपे। स्वर्गे॥ त्रिदशानाम् आवासः॥

त्रिदशाहारः। पुं। अमृते। पीयूषे॥

त्रिदशेश्वरी। स्त्री। दुर्गायाम्॥

त्रिदालिका। स्त्री। चर्म्मकषायाम्॥

त्रिदिनव्रतम्। न। नैमित्तिकेव्रतविशेषे॥ यथा। खरकुक्कुटकोलाँश्च विश्री शनोद्विजातयः। भीषयित्वं चरको पिशुद्धोयु त्रिदिनव्रतात्॥ दिवसेकं निराहारो द्वितीयं कणभोजनः। तृतीयन्तु नयेदह्नि त्रिदिनव्रतमस्ति केइतिकुलार्णवसेतुः॥

त्रिदिनस्पृक्। पुं। व्यहस्पर्शे। अहस्तिथित्रयस्पर्शने॥ यथा। त्रिदिनस्पृक् दिनत्रयस्पर्शनादह्नः। तथाहोरात्रस्य वारद्वयेन तिथ्यन्तद्वयं यदि स्पृश्यते तदा त्रिदिनस्पृक् स्यादित्यर्थः॥

त्रिदिवः। पुं। स्वर्गे॥ त्रयो ब्रह्मविष्णुरुद्राः दीव्यन्त्यत्रेति त्रिदिवः। हलश्चेति घञ्। संज्ञापूर्व्वकत्वान्न गुणः॥ यद्वा। सात्त्विकराजसतामसभेदेन त्रिविधा दीव्यन्ति व्यवहरन्ति प्रकाशन्ते वा। इगुपधत्वात्कः॥ यद्वा तृतीयाद्यौः। पञ्चर्थकविधानम्। वृत्तिविषये सङ्ख्याशब्दस्य पूरणार्थत्वम्॥ न। खे। नभसि॥ सुखे॥

त्रिदिवा। स्त्री। नदीविशेषे॥

त्रिदिवेशः। पुं। देवे। निर्ज्जरे॥ त्रिदिवस्य ईशः॥

त्रिदिवोद्भवा। स्त्री। स्थूलैलायाम्॥

त्रिदिवौकाः। पुं। देवे। सुरे॥

त्रिदृक्। पुं। शिवे। महादेवे॥ त्रि। त्रिनेत्रे॥

त्रिदोषः। पुं। सन्निपाते॥ न। वात-

पित्तकफरूपे दोषत्रये ॥

त्रिदोषजः । पुं । त्रिदोषजनिते सन्नि पातरोगे ॥ अस्य पूर्वरूपम् । सर्व-लिङ्गसमावायः सर्वदोषप्रकोपजे ॥ सर्वदोषप्रकोपजे पूर्वं सर्वलिङ्गसमावायः । कतिपयितजृम्भाभेषदाहाद्या रुचिसहितानां श्रमादीनां समवायो भवति ॥ * ॥ त्रिरज्वरे वातकफोत्थयोवा त्रिदोषजेवाद्यमूलमिश्रः । किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिनेवा त्रिवृतादिमिश्रः ॥

त्रिधा । अ । त्रिप्रकारे ॥ यथा । त्रिधाकरोति ॥

त्रिधातुः । पुं । गणेशे ॥ न । धातुत्रये ॥

त्रिधामा । पुं । विष्णौ ॥ शिवे ॥ अग्नौ ॥ मृत्यौ ॥ त्रीणिधामानि स्थानानि भूरादीनि सत्त्वादीनि वा यस्य सः ॥ न । स्त्री । धामत्रये ॥

त्रिधारकः । पुं । गुण्डतृणे ॥

त्रिधारस्नुही । स्त्री । व्यस्ने । स्नुहीविशेषे ॥

त्रिधाविशेषः । पुं । सूक्ष्मादिविशेषे ॥ यथा । सूक्ष्मामातापितृजाः सहप्रभूतै स्त्रिधाविशेषाः स्युः । सूक्ष्मास्तेषां नियता मातापितृजानिवर्त्तन्त ॥ सूक्ष्मशरीरमेकः मातापितृजोद्वितीयः महाभूतानिहतीयोविशेषः । तेषांमध्ये सूक्ष्मानियताः माता पितृजानिवर्त्तन्ते कीटाका वा भस्मान्ता वा विडन्ता वेति ॥ त्रिप्रकारको विशेषः ॥

त्रिधासर्गः । पुं । भूतादिसर्गे ॥ अष्टविकल्पोदैव स्तैर्यग्योनश्चपञ्चधाभवति । मानुष्यश्चैकविधः समासतोयं त्रिधासर्गः ॥ ब्राह्मः प्राजापत्यः ऐन्द्रः पैत्रः गान्धर्वः याक्षः राक्षसः पैशाच इत्यष्टविकल्पोदैवः सर्गः । १ ॥ पशुमृगपक्षिसरीसृपस्थावरा इतिपञ्चविधस्तैर्यग्योनः सर्गः । २ ॥ मानुष्यस्त्वेकविधः । ३ ॥ ब्राह्मणाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपिवर्णेष्वविशेषात् ॥

त्रिनयनः । पुं । त्रिषमनयने । शिवे ॥ त्रीणिनयनान्यस्य । क्षुभ्नादिषुचेति निषेधात् पूर्वपदात् संज्ञायामग इतिणत्वाभावः ॥ त्रि । नेत्रत्रयवति ॥

त्रिनयना । स्त्री । उमायाम् ॥ टाप् ॥

त्रिनेत्रः । पुं । शिवे । हरे ॥ त्रीणिनेत्राणियस्य ॥ त्रि । नेत्रत्रयविशिष्टे ॥

त्रिनेत्रचूडामणिः । पुं । शशाङ्के । चन्द्रे ॥

त्रिनेत्रा । स्त्री । वाराहीकन्दे ॥ नेत्रत्रययुक्तायाम् ॥

त्रिपञ्च । त्रि । त्रिगुणितपञ्चसु । पञ्च

| त्रिपथ | त्रिपदी |
| --- | --- |

दर्शनम् ॥

त्रिपथाङ्गम् । न । पञ्चदशसङ्ख्याकाङ्गेषु निदिध्यासनाङ्गसाधकसाधनविशेषेषु ॥ तानि यथा । यमोहि नियमस्त्यागो मौनं देशश्च कालता । आसनं मूलबन्धश्च देहसाम्यञ्च दृक्स्थितिः ॥ प्राणसंयमनञ्चैव प्रत्याहारश्च धारणा । आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् ॥ एषां तु लक्षणं स्वस्वस्थाने ज्ञेयं मनीषिभिः ॥

त्रिपताकम् । न । रेखात्रयाङ्कितभाले ॥

त्रिपत्रः । पुं । बिल्वे ॥ न । दलत्रयवति बिल्वपत्रे ॥ यथा । विष्णुरुवाच । ऊर्द्ध्वपत्रं हरो ज्ञेयः पत्रं वामं विधिः स्वयम् । अहं दक्षिणपत्रञ्च त्रिपत्रदलमित्यथ । तेनेति बृहद्धर्मपुराणे ११ अध्यायः ॥

त्रिपत्रकः । पुं । किंशुकवृक्षे । पलाशे ॥

त्रिपत्री । स्त्री । पत्रत्रये ॥ द्विगोरिति ङीप् ॥

त्रिपथम् । न । त्रिमार्ग्याम् ॥ त्रयाणां पथां समाहारः । तद्धितार्थेतिसमासः । ऋक्पूरिति समासान्तः । पथः सङ्ख्याव्ययादेरिति क्लीवता ॥

त्रिपथगा । स्त्री । भागीरथ्याम् । गङ्गायाम् ॥ त्रीन्पथो गच्छति । त्रिभिः पथिभिर्गच्छतिवा । गमू० । अन्येभ्यो दृश्यते ॥ यद्वा । त्रिपथेन गच्छति । डः ॥ टाप् ॥ त्रिन्तारयते मर्त्यान् नागांस्तारयतेप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता ॥

त्रिपदा । स्त्री । ऋग्विशेषे ॥ त्रयः पादा अस्याः । सङ्ख्यासुपूर्वस्येति पादस्यान्त्यलोपः । टाबृचीति टापि भस्यात् पादः पत् ॥ हंसपदीवृक्षे ॥

त्रिपदिका । स्त्री । तिपाई इति प्रसिद्धे आधारविशेषे ॥ अर्घ्याद्यर्थधातुनिर्मिते त्रिपादयुक्ते शङ्खादिपात्राधारे ॥

त्रिपदी । स्त्री । गोधापदीलतायाम् । हंसपद्याम् ॥ हस्तिगात्रबन्धे ॥ त्रिपदी पादबन्धनमितियादवः ॥ अर्घ्यादिपात्राधारे ॥ त्रयःपादाअस्याः सङ्ख्यासुपूर्वस्येति पादशब्दस्यान्त्यलोपः । पादोन्यतरस्यामिति ङीपि भत्वात् पादःपदिति पद्भावः ॥ पादत्रययुक्तायाम् ॥ भाषाकविताया छन्दोविशेषे । यथा । पञ्चघटिकान्ता यदियमकान्ता द्वादशपरिणतमात्रा । किन्नरगीतिस्त्रिदितिनिवीतिः स्याद्वैसमाचरगात्रा ॥ त्र्यपादान्तउदाहृतः ॥ यैषा सङ्गीतकेनित्यं निवीतिः किन्नराख्यिका ॥ सैव स्यात् प्राकृतेगाने त्रपदीतिपरिस्मृता ॥ इतिकाव्योदयः ॥

त्रिपर्णः । पुं । किंशुके ॥

त्रिपर्णा । स्त्री । वनकार्पास्याम् ॥

त्रिपर्णिका । स्त्री । कन्दविशेषे । अम्लवल्ल्याम् । कन्दालौ ॥

त्रिपर्णी । स्त्री । शालपर्ण्याम् ॥ वनकार्पास्याम् ॥ पृश्निपर्णीभेदे ॥

त्रिपात्-द् । पुं । विष्णौ ॥ ज्वरे ॥ त्रयः पादा अस्य । संख्यासुपूर्वस्येतिपादस्यान्तलोपः ॥

त्रिपादिका । स्त्री । हंसपदीलतायाम् ॥

त्रिपिबन् । पुं । वार्द्धीणसे ॥ नद्यादौ पयः पिबतो यस्य त्रीणि जलं स्पृशन्ति कर्णौ जिह्वा च । त्रिभिः पिबति । पा० । शतृ ॥

त्रिपिष्टपम् । न । स्वर्गे ॥ त्रिदशानां पिष्टपम् । पृषोदरादित्वाद् दशशब्दलोपः ॥ तृतीयं पिष्टपम् त्रिपिष्टपम् । पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यते त्रिभागवत् । मर्त्यपातालापेक्षया तृतीयं पिष्टपं भुवनम् ॥

त्रिपिष्टपसद् । पुं । देवतायाम् ॥ त्रिपिष्टपे दिवि सीदतिवर्त्तते । षद्लृ० । क्विप् ॥

त्रिपुटः । पुं । सतीनके । खिसारीति प्रसिद्धे कलाये ॥ त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् । कफपित्तहरो रुच्यो ग्राहकः शीतलस्तथा ॥ कि-ञ्चिद्वातप्रकोपकारी वातातिकोपनः ॥ तीरे ॥ तालके ॥ हस्तभेदे ॥ गोक्षुरे ॥

त्रिपुटा । स्त्री । मल्लिकायाम् ॥ सूक्ष्मैलायाम् ॥ त्रिवृदोषधौ ॥ त्रयः पुटा यस्याः ॥ कर्णस्फोटायाम् ॥ रक्तत्रिवृति ॥ स्थूलैलायाम् ॥ देवीविशेषे ॥

त्रिपुटी । पुं । एरण्डे ॥

त्रिपुटी । स्त्री । त्रिवृतायाम् ॥ त्रयाणां पुटानां समाहारे ॥ त्रयाणां ज्ञातृज्ञानज्ञेयादिरूपाणां पुटानामाकाराणां समाहारः । द्विगोरिति ङीप् ॥

त्रिपुटीफलः । पुं । एरण्डे ॥ त्रिपुटी फले यस्य ॥

त्रिपुण्ड्रम् । न । भालस्थतिर्य्यग्रेखात्रयाङ्किततये ॥ ऊर्द्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्त्रिपुण्ड्रकम् । अर्द्धचन्द्रञ्च वैश्यश्च वर्त्तुलं शूद्रयोनिजः ॥ * ॥ विनाभस्मत्रिपुण्ड्रेण विनारुद्राक्षमालया । पूजितोपिमहादेवो न स्यात्तस्यफलप्रदः ॥ तस्मान्मृदापिकर्त्तव्यं ललाटे तु त्रिपुण्ड्रकमितिस्मृतिः ॥ मृत्स्नया भस्मना वापि त्रिपुण्ड्रं बिन्दुसंयुतम् । ललाटे तिलकं कुर्याद् गायत्र्या बद्धकुन्तल इति महानिर्वाणतन्त्रम् ॥ येषां वपुर्मनुष्याणां त्रिपुण्ड्रे

कविनाश्रितम् । श्मशानसदृशं तत्-
शास्त्रमेवं पुण्यकृज्जनैरितिदेवी-
भागवतम् ॥ अपि च तत्रैव नारदं प्रति
नारायणवाक्यम् । त्रिपुण्ड्रं ये विनि
न्दन्ति निन्दन्ति शिवमेव ते । धारयन्ति
च ये भक्त्या धारयन्ति तमेव ते ॥ तिर्य
ग्रेखाः प्रदृश्यन्ते ललाटे सर्वदेहिना
म् । तथापि मानवा मूर्खा न कुर्वन्ति
त्रिपुण्ड्रकमिति ॥ त्रयाणां पुण्ड्राणां
समाहारः ॥ तद्धितार्थेत्यादिना स
मासः ॥

त्रिपुण्ड्रकम् । क्ली । त्रिपुण्ड्रे ॥ वक्त्रालला
टगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकमि
तिहारावली ॥ त्रिपुण्ड्रमेव । स्वा-
र्थे कः ॥

त्रिपुरः । पुं । असुरविशेषे ॥ क्ली । मय
दानवविरचिते कामचारिणि पुरत्र
ये ॥ त्रयाणां पुराणां समाहारः त्रि
पुरम् । तद्धितार्थेतिसमासः । पात्रा
दित्वात् स्त्रीत्वाभावः ॥

त्रिपुरदहनः । पुं । शिवे । हरे ॥

त्रिपुरभैरवी । स्त्री । देवीविशेषे ॥

त्रिपुरमल्लिका । स्त्री । पुष्पवृक्षविशेषे
। क्षेमशायाम् । त्रिपुरमालिकेति
गौडेषु ख्यातायाम् ॥

त्रिपुरमालिका । स्त्री । मोहिन्याम् ।
वटपत्रायाम् ॥

त्रिपुरा । स्त्री । चतुर्वर्गप्रदायां परदे
वतायाम् ॥ ब्रह्मविष्णुमहेशाद्यैस्त्रि
दशैरर्चितापुरा । त्रिपुरेतितदाना
मकथितं दैवतैस्तव ॥ अपि च । त्रि
कोणं मण्डलञ्चास्यास्त्रिपुरन्तु त्रिरे
खकम् । मन्त्रस्त्र्यक्षरं प्रोक्तं तथा रू
पत्रयं पुनः ॥ त्रिविधा कुण्डलीशक्ति
स्त्रिदेवानाञ्च सृष्टये । सर्वं त्रयं त्रयं
यस्मात् तस्मात्तु त्रिपुरा मतेति ॥

त्रिपुरान्तकः । पुं । महेश्वरे । शूलिनि
। शिवे ॥ त्रयाणां सुवर्णरौप्यलौहा-
नां मयादिनामकानां दैत्यत्रयाणां
वा पुराणि तेषामन्तकोनाशकः । त्र्य
वयवं पुरं त्रिपुरं तस्यान्तकः ॥ त्रया
णां पुराणां समाहारः । पात्रादिरि
ति कश्चित् तन्न । तथासति पञ्चपा-
त्रीतिवत् त्रिपुरीति प्रयोगाभावः
स्यात् ॥

त्रिपुरारिः । पुं । सदाशिवे ॥

त्रिपुरी । स्त्री । चेदिपुर्याम् । त्रिपुरा
इति प्रसिद्धे देशे ॥

त्रिपुषा । स्त्री । कृष्णत्रिवृति ॥

त्रिपुष्करम् । क्ली । ब्रह्मकृततीर्थविशेषे ।
ज्येष्ठमध्यमकनिष्ठेषु त्रिषु पुष्कराभि
धह्रदेषु ॥ पुं । योगविशेषे ॥ यथा ।
वाराः क्रूरा स्तिथिर्भद्रा नक्षत्रं भद्र
पादकम् । आते ऽङ्गारकोयोगो

मरणे ऽप्यपिपुष्करइति ॥

त्रिपुष्टः । पुं । राजभेदे । प्राजापत्ये ॥

त्रिपृष्ठः । पुं । त्रयाणांलोकानामुपरिस्थिते सत्यलोके ॥

त्रिफला । स्त्री । हरीतक्यादिफलत्रिके ॥ पथ्याविभीतधात्रीणांफलैः स्यात् त्रिफला समैः । फलत्रिकञ्च त्रिफला सावराच प्रकीर्तिता ॥ त्रिफला कफपित्तघ्नी मेहकुष्ठहरीसरा । चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी ॥ त्रयाणां फलानां समाहारः । अ आदित्वात् द्विगोरिति न ङीप् ॥

त्रिफली । स्त्री । त्रिफलायाम् । इति राजनिर्घण्टः ॥

त्रिबलीकम् । न । पायौ ॥

त्रिभङ्गी । स्त्री । मात्राछन्दोन्तरे ॥ यथा । प्रथमं यदि दशमं वहति विरामं तदनु निकामं वसुवसुकम् वसुविमलतुरङ्गम मतिहृदयङ्गम भूषितभुजङ्गम नृपतिलकम् । चिंशद्दिकलासं विहितनिवासं सततविलासं हृदय मुदे मदमुदितभुजङ्गी मोहनरङ्गी वदति त्रिभङ्गीछन्दमदः ॥ यथा । विविधायुधमण्डित सङ्गरपण्डित रावणखण्डितपाखण्डभटे चण्डामुरखण्डिनि हरपुरमण्डिनि शशधरखण्डनिबद्धजटे । भवसागरतारि-



णि दुर्गतिवारिणि मङ्गलकारिणि मयिसुचिरम् गिरिराजनिवासिनि शैलविलासिनि शम्भुविलासिनि देहिवरमिति ॥

त्रिभण्डी । स्त्री । त्रिवृतायाम् । श्वेतत्रिधारेतिख्यातौषधौ ॥ त्रीन् दोषान्भण्डते । भण्डिपरिभाषणे । कर्मण्यण् । ङीप् ॥

त्रिभद्रम् । न । सुरते ॥ इतित्रिकाण्डशेषः ॥

त्रिभुवनम् । न । स्वर्गमर्त्यपाताला ख्यके लोकत्रये । त्रिलोक्याम् ॥ त्रयाणां भुवनानां समाहारः ॥ तद्धितार्थेत्यादिना समासः ॥

त्रिमदः । पुं । मुस्ताचित्रकविडङ्गेषु ॥

त्रिमदोत्थः । त्रि । त्रिभिर्मदैरुत्पन्ने ॥ विद्यामदो धनमदस्तथैवाभिजनो मदः । एते मदा मदान्धानां त एव हि सतां दमाः ॥

त्रिमधुः । पुं । ऋग्वेदैकदेशे ॥ मधु वाताऋतायते त्यृचत्रये ॥ यथा । त्रिणाचिकेत स्त्रिमधुस्त्रिसुपर्णः षडङ्गविदिति ॥ न । मधुत्रये । मिलितसितामाक्षिकसर्पिःषु ॥ यथा । दुग्धं सिता माक्षिकञ्च विज्ञेयं मधुरत्रयम् ॥

त्रिमार्गगा । स्त्री । गङ्गायाम् ॥ त्रिभि

मार्गं गच्छतीति विग्रहः ।

त्रिमार्गी । स्त्री । त्रिपथे ॥ त्रयाणां मार्गाणां समाहारः ॥ ङीप् ॥

त्रिमुकुटः । पुं । त्रिकूटाचले ॥

त्रिमुखः । पुं । बुद्धविशेषे ॥

त्रिमुखा । स्त्री । बुद्धदेवीविशेषे । मायादेव्याम् । वज्रवाराह्याम् ॥

त्रिमूर्त्तिः । पुं । बुद्धभेदे ॥ ब्रह्मविष्णुशिवाख्यमूर्त्तित्रयवति ॥ यथा । त्रिमूर्त्तिर्यः सर्गस्थितिविलयकर्माणि तनुते । इति गङ्गेशोपाध्यायः ॥ तिस्रो मूर्त्तयो यस्य ॥ स्त्री । देवीविशेषे ॥ तिस्रो मूर्त्तयो यस्याः । त्रयो ब्रह्मादयो मूर्त्तयो यस्याः ॥ एकमूर्त्तिरपि भिन्नरूपिणी या जगज्जननपालनक्षये । काच्युतेश्वरतया विवर्त्तते ब्रह्मशक्तिमहमानतोऽस्मि ताम् ॥

त्रियष्टिः । स्त्री । श्वेतपर्प्याम् ॥

त्रियामकम् । न । पापे ॥ इति शब्दमाला ॥

त्रियामा । स्त्री । रात्रौ ॥ त्रयो यामा यस्याः । आद्यन्तयोरर्द्धयोश्चेष्टाकालत्वेन दिनप्रायत्वात् ॥ हरिद्रायाम् ॥ यमुनायाम् ॥ नील्याम् ॥ कृष्णत्रिवृतायाम् ॥

त्रियुगः । पुं । यज्ञपुरुषे ॥ कृतयुगे यज्ञाभावात् । कलौ छन्नत्वाद्वा ॥

त्रियूहः । पुं । कपिलाश्वे ॥

त्रिरात्रम् । न । रात्रित्रये । तिसृणां रात्रीणां समाहारे ॥

त्रिरुक्तम् । त्रि । विषादादिना त्रिवारोच्चारिते ॥ विषादे विस्मये हर्षे खेदे दैन्येऽवधारणे । प्रसादने सम्भ्रमेऽपि द्विस्त्रिरुक्तं न दुष्यति ॥

त्रिरेखः । पुं । शङ्खे ॥ त्रि । रेखात्रयविशिष्टे ॥ तिस्रो रेखा यस्य सः ॥

त्रिलवः । पुं । तृतीयांशे ॥

त्रिलवणम् । न । लवणत्रये ॥ यथा । सैन्धवञ्च विडञ्चैव रुचकञ्च तृतीयकम् । मिलितञ्चैतत् त्रिलवणं वैद्यशास्त्रे निरूपितम् ॥

त्रिलोकात्मा । पुं । अन्तर्यामिणि ॥ त्रयाणां लोकानामात्मा ॥

त्रिलोकधृक् । पुं । विष्णौ ॥ त्रीन् लोकान् धारयति इति । धृञ् । क्विप् ।

त्रिलोकी । स्त्री । स्वर्गमर्त्त्यपातालेषु ॥ त्रयाणां लोकानां समाहारः । द्विगोरिति ङीप् ॥

त्रिलोकेशः । पुं । सूर्ये ॥ सदाशिवे ॥ त्रयाणां लोकानामीशोऽधिष्ठाता ॥ त्रयो लोकास्तदाज्ञप्ताः स्वेषु कर्मसु वर्त्तन्त इति वा ॥

त्रिलोचनः । पुं । त्र्यम्बके । शिवे ॥ त्रीणि लोचनानि यस्य सः । त्रिषु कालेषु

लोकेषु गुणेषु वेदेषु वा लोच नं ज्ञानं यस्येतिवा । त्रयोवेदाः वर्णा वा अकारोकारमकाराः लोचनानि यस्यवा ॥

त्रिलोचना । स्त्री । दुर्गायाम् ॥ बुद्धदेवी प्रभेदे ॥

त्रिलोचनाष्टमी । स्त्री । गौणचान्द्रज्येष्ठस्य कृष्णाष्टम्याम् ॥

त्रिलोहकम् । न । सुवर्णरजतताम्राभिधे धातुत्रये ॥

त्रिलोही । स्त्री । त्रिलोहघटितमुद्राविशेषे ॥

त्रिवर्गः । पुं । धर्मकामार्थेषु ॥ धर्मार्थकामाः सममेव सेव्या योह्येकसक्तः सजनोजघन्यः ॥*॥ यथाऽऽनुकूल्यं दम्पत्योस्त्रिवर्गस्तत्रवर्द्धते ॥ त्रिफलायाम् ॥ कटुत्रिके ॥ वृद्धिस्थानक्षये ॥ क्षयःस्थानञ्चवृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ सत्त्वरजस्तमःसु ॥ त्रयाणांवर्गःसमूहः ॥ सुनीतौ ॥ इति शब्दरत्नावली ॥

त्रिवर्गकः । पुं । गोक्षुरके ॥ न । त्रिफलायाम् ॥ त्र्यूषणे । कटुत्रिके ॥ ब्राह्मणक्षत्रियविट्सु ॥

त्रिवर्षिका । स्त्री । त्रिवर्षायाङ्गवि । त्रिहायण्याम् ॥ त्रीणिवर्षाणि वयोयस्याः सा त्रिवर्षा । ततःस्वार्थेकः ॥

त्रिविक्रमः । पुं । विष्णौ ॥ बलिवञ्चनार्थं भूव्योमस्वर्गेषु त्रिषुलोकेषु गुणेषुवा त्रयोवा विक्रमाःपादन्यासा यस्यसः । त्रिदिस्थेवत्रयोलोकाःकीर्त्तितामुनिसत्तमैः । क्रमतेतांस्त्रयःसर्वांस्त्रिविक्रमोजनार्दनः ॥ इतिहरिवंशः ॥ त्रींल्लोकान् विशेषेण क्रामति व्याप्नोतिवा । क्रमु० । अच् ॥

त्रिविधः । त्रि । त्रिप्रकारे ॥ तिस्रोविधायस्यसः ॥

त्रिविधसर्गः । पुं । त्रिधासर्गे ॥

त्रिविष्टपम् । न । स्वर्गे । सुरलोके ॥ त्रिशन्त्यस्मिन् सुकृतिन इति त्रिष्टपम् । विटपपिष्टपविशिपोलपा इति विशेरौणादिकः कपन्प्रत्ययः तस्य तुट् । व्रश्चेतिषत्वम् । त्रिविष्टपेतिपाठउज्ज्वलदत्तटीक्योक्तः । अन्येतु विष्टपेतिदन्त्योष्ठादिमेव पठन्ति । युक्तञ्चैतत् । यतःभ्रष्टविष्टपमित्यादौ तथादर्शनात् । अमरकोषे पि विष्टपं भुवनं जगदितिप्रचुरपाठाच्च ॥ तृतीयं विष्टपम् ॥ त्रिभुवने ॥

त्रिविष्टपसद् । पुं । देवे । सुरे ॥

त्रिवीजः । पुं । श्यामाके ॥ इतिराजनिर्घण्टः ॥

त्रिवृत् । स्त्री । त्रिवृतायाम् । सुवहायाम् । श्वेतनिशोथ इति प्रसिद्धौषधौ

॥ श्वेतात्रिवृद्रेचनी स्यात् स्वादुरुष्णा समीरजित् । रूक्षा पित्तज्वरश्लेष्मपित्तशोथोदरापहा ॥ श्वेतकृष्णाप्रभेदेन द्विविधा त्रिवृदुच्यते । श्यामात्रिवृत्ततो हीनगुणा तीव्रा विरेचिका ॥ मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी ॥ त्रीन् अवयवान् वृणोति । वृञ॰ । क्विप् तुक् ॥

त्रिवृता । स्त्री । त्रिवृदोषधौ ॥ त्रिभिरवयवैर्वृता ॥

त्रिवृत्करणम् । न । तेजोवन्नानां मिश्रीकरणे ॥ तत्प्रकारो यथा । तेजोवन्नानांत्रयाणां मध्ये एकैकं द्विधा समं विभज्य पुनरेकैकभागस्य द्विधाविभागं कृत्वा स्वस्वद्वितीयं स्थूलं भागं परित्यज्यान्यदीयस्थूलभागयोरेकैकस्य भागस्य संयोजनमिति ॥

त्रिवृत्पर्णी । स्त्री । हिलमोचिकायाम् ॥

त्रिवृद्वेदः । पुं । त्रय्याम् । ऋग्यजुःसामात्मके वेदे ॥ प्रणवे ॥ ऋचो यजूंषि सामानि तानानि विविधानि च । एष एव त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥ आद्यं यत् त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता । स गुह्योन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥ ऋगाद्यात्मना त्रिरावर्त्तते इति त्रिवृत् स चासौ वेदश्चेति कर्म्मधारयः ॥

त्रिवेणी । स्त्री । स्थानविशेषे ॥ सा द्विधा । युक्तवेणीमुक्तवेणीतिभेदात् । तत्र प्रयागे युक्तवेणी गङ्गया यमुना सरस्वत्योः सङ्गमात् ॥ दक्षिणप्रयागे मुक्तवेणी गङ्गया यमुनासरस्वत्योर्वियोगात् ॥ दक्षिणप्रयागस्य सीमानिर्णयो यथा । प्रद्युम्नह्रदाद्याम्ये सरस्वत्यास्तथोत्तरं । तद्दक्षिणप्रयागन्तु गङ्गातो यमुना गतेति ॥ * ॥ सगरसन्ततिसन्तरणेच्छया प्रचलितातिजवेन हिमालयात् । इहतु मन्दमुपैति सरस्वतीयमुनयोर्विरहादिव जाह्नवीतिनद्याधिपतिस्तु त्र्यम्बकराजसभास्थो वाणेश्वरविद्यालङ्कारः ॥

त्रिवेणुः । पुं । रथमुखस्थेऽवयवविशेषे ॥

त्रिवेदः । पुं । वेदत्रयवेत्तरि ॥

त्रिवेदी । पुं । त्रिवेदश्चे ॥

त्रिवेदी । स्त्री । वेदत्रये ॥ त्रयाणां वेदानां समाहारः । द्विगोरिति ङीप् ॥ ऐष्टिकपाशुकसौमिकवेदिकात्रये ॥

त्रिवेला । स्त्री । त्रिवृति ॥

त्रिशक्तिधृक् । पुं । भगवति ॥ त्रिशक्तिर्माया तां धरतीतिविग्रहः ॥

त्रिशङ्कुः । पुं । सूर्य्यवंशीयन्नृपविशेषे ॥ शलभे ॥ वृषदंशके । मार्ज्जारे ॥ चातके ॥ खद्योते ॥

